# ॥ श्री राघवेंद्राष्टाक्षरस्तोत्रं ॥

गुरुराजाष्टाक्षरं स्यात् महापातकनाशनम् ।
एकैकमक्षरं चात्र सर्वकाम्यार्थ सिद्धिदम् ॥ १ ॥

रकारोच्चारणमात्रेण रोगहानिर्न संशयः ।
घकारेण बलं पुष्टिःआयुः तेजश्च वर्धते ॥ २ ॥

वकारेणात्र लभते वांछितार्थान्न संशयः।
द्रकारेणाघराशिस्तु द्राव्यते द्रुतमेव हि ॥ ३ ॥

यकारेण यमाद्बाधो वार्यते नात्र संशयः ।
नकारेण नरेंद्राणां पदमाप्नोति मानवः ॥ ४ ॥

मकारेणैव माहेंद्रमैश्वर्यं याति मानवः।
गुरोर्नाम्नाश्च महात्म्यं अपूर्वं परमाद्भुतम् ॥ ५ ॥

तन्नामस्मरणादेव सर्वाभिष्टं प्रसिध्यति ।
तस्मान्नित्यं पठेद्भक्त्या गुरुपादरतस्सदा ॥ ६ ॥

श्रीराघवेंद्राय नमः इत्याष्टाक्षरमंत्रतः ।
सर्वान्कामानवाप्नोति नात्र कार्या विचारणा ॥ ७ ॥

अष्टोत्तरशतावृत्तिं स्तोत्रस्यास्य करोति यः ।
तस्य सर्वार्थसिद्धिस्यात् गुरुराजप्रसादतः ॥ ८ ॥

एतदष्टाक्षरस्यात्र महात्म्यं वेत्ति कः पुमान् ।
पठनादेव सर्वार्थसिद्धिर्भवति नान्यथा ॥ ९ ॥

स्वामिना राघवेंद्राख्य गुरुपादाब्जसेविना ।
कृतमष्टाक्षरस्तोत्रं गुरुप्रीतिकरं शुभम् ॥ १० ॥

॥इतिश्रीगुरुजगन्नाथदासार्यविरचित श्रीराघवेंद्राष्टाक्षरस्तोत्रं संपूर्णं ॥
॥ श्रीकृष्णार्पणमस्तु ॥